येन्द्रियेति । तथा चेन्द्रियसन्निकर्षानधीनापरोक्षत्वादिति हेतुशरीरं सिद्धं भवति ॥ **ज्ञानवदिति** ॥ तस्य स्वतःसिद्धतया तत्र हेतुसद्भाव इति भावः ॥ **तस्येति** ॥ इदन्तानिषेधकत्वेनैव बाधकत्वोपपत्तौ रजतनिषेधकत्वस्यापि कल्पने गौरवमित्याशयः । अत एवाह ॥ **निषेधेनैवेति** ॥ परिशेषं विघटयितु-मनुभवविरोधं स्मारयति ॥ **सत्त्व इति** ॥ एवं परिशिष्यमाणे बाधात्परिशेषानुपपत्तिमभिधायोक्तरीत्या सत्त्वोपपत्तौ प्रसक्तप्रतिषेधासंभवेनापि तदनुपपत्तिमाह ॥ **असत इति** ॥ अनुभवविरोधं परिहर्तुं शङ्कते ॥ **बहिरिति** ॥ **नेति** ॥ अन्यथाऽन्योन्याश्रयः स्यादिति भावः स्वनिष्ठत्वेनेन्द्रियसन्निकर्षो विशिष्यते न वा । आद्य आह ॥ **इन्द्रियेति** ॥ अन्त्य आह ॥ **शुक्तीति** ॥ **दृष्टान्तश्चेति** ॥ शुक्तिज्ञाने स्वप्रकाशतायाः निराकरिष्यमाणत्वादिति भावः । अङ्गीकारादित्यनेन साक्षिण इन्द्रियत्वानङ्गीकारिण एतद्दोषप्रसरेऽपि मां प्रति तदप्रसर इति सूचयति ॥ आरोपविशेषे दोषमाह ॥ **किं चेति** ॥ अन्यथा बुद्धावपि तस्यातात्त्विकत्वादन्तरसत्त्वे । अत्र शुक्तिसंप्रयोगेणेत्युक्त्येदन्तायाः अनिषेधान्न कल्पनागौरव-मिति । असदेव रजतमित्यनुभवोक्त्या च रजतनिषेधकत्वमेव बाधकप्रत्ययस्य युक्तमिति सूचयति ।

स०— ननु बहिरिन्द्रियासंप्रयोगे सतीति विवक्षितमतो न साधनशून्यतेत्यत आह ॥ **किं चेति** ॥ **आत्मख्यातिपक्ष इति** ॥ विज्ञानख्यातिपक्ष इत्यर्थः ॥

प०— **अपर इति** ॥ बौद्धैकदेशिनो विज्ञानात्मतत्त्ववादिन इत्यर्थः । परिशेषमुक्त्वाऽनुमानं चाह ॥ **किं चेति** ॥ इदमितिपक्षः शुक्तौ प्रतीयमानं रजतमित्यर्थः । ज्ञानरूपमिति साध्यम् । **इन्द्रियसंप्रयोगेऽसति अपरोक्षत्वादिति**॥प्रतीयमानरजतस्येन्द्रियसन्निकर्षाजन्यप्रत्यक्षविषयत्वादित्यर्थः ॥ **उक्तत्वादिति** ॥ पूर्वमतनिरासप्रस्ताव उक्तत्वादित्यर्थः । तथा चासत्त्वेनोपपत्त्या न परिशेषावतार इति भावः । तत्सत्त्वे बहिष्ठतायास्सत्त्वे । असत्त्वेऽसदेव रजतमित्यादिनोक्तदोषोद्धारमाशङ्कते ॥ **बहि-स्सत्त्वमेवेति** ॥ कल्पकाभावादिति भावेनाह ॥ **आन्तरत्व इति** ॥ अनुमानं च निरसितुं किं प्रतीय-मानरजतादिसन्निकर्षजन्यत्वेनापरोक्षत्वमभिमतमुत सन्निकर्षमात्रं विनेति हृदि कृत्वाऽऽद्य आह ॥ **इन्द्रि-येति** ॥ अन्त्येऽसिद्धिरिति भावेनाह ॥ **शुक्तीति** ॥ **ज्ञानस्यापीति** ॥ स्वरूपेन्द्रियसंप्रयोगाभिव्यक्त-साक्षिरूपापरोक्षज्ञानविषयस्य ज्ञानेऽपि स्वीकारादिति भावः ।